# MUKTIKOPANISHAT

OF THE

# WHITE YAJURVEDA

Edited By

PANDIT JIBANANDA VIDYASAGARA B. A.



Calcutta.

PRINTED AT THE SUCHARU JANTRA.

1872

*To be had from Pandit Jibananda Vidyasagara* B. A. *Govt. Sanscrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तकवाचस्पति पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि ।

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | ... | ३। |
| २ | धातुरूपादर्शः | ... | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ... | ११ |
| ५ | सिद्धान्तबिन्दुसार [वेदान्त] | ... | ॥ |
| ६ | तुलादानादिपद्धति [वङ्गाक्षरैः] | ... | ४ |
| ७ | गयाश्राद्धादिपद्धति | ... | १ |
| ८ | शब्दार्थरत्न | ... | ॥। |
| ९ | वाक्यमञ्जरी [वङ्गाक्षरैः] | ... | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | ... | १॥ |
| १३ | रत्नावली | ... | १॥ |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥ |
| १५ | धनञ्जय विजय—सटीक | ... | । |
| १६ | महावीरचरित | ... | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक | ... | २॥ |
| १८ | वैयाकरणभूषणसार | ... | २ |
| १९ | लीलावती | ... | ॥। |
| २० | वीजगणित | ... | १ |
| २१ | शिशुपालवध—सटीक | ... | ६ |
| २२ | किरातार्जुनीय—सटीक | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड | ... | १ |



हरिः ॐ तत्सत्।

# मुक्तिकोपनिषत्।

---

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥
ॐ शान्तिः। ॐ शान्तिः। ॐ शान्तिः।

ॐ अयोध्यानगरे रम्ये रत्नमण्डपमध्यमे।
सीताभरतसौमित्रिशत्रुघ्नाद्यैः समन्वितम्॥ १॥
सनकाद्यैर्मुनिगणैर्वशिष्ठाद्यैः शुकादिभिः।
अन्यैर्भागवतैश्चापि स्तूयमानमहर्निशम्॥ २॥
धीविक्रियासहस्राणां साक्षिणं निर्व्विकारिणम्।
स्वरूपध्याननिरतं समाधिविरमे हरिम्॥ ३॥
भक्त्या शुश्रूषया रामं स्तुवन् पप्रच्छ मारुतिः।
राम! त्वं परमात्मासि सच्चिदानन्दविग्रहः॥ ४॥
इदानीं त्वां रघुश्रेष्ठ! प्रणमामि मुहुर्मुहुः।
तद्रूपं ज्ञातुमिच्छामि तत्त्वतो राम! मुक्तये॥ ५॥
अनायासेन येनाहं मुच्येयं भवबन्धनात्।
कृपया वद मे राम! येन मुक्तो भवाम्यहम्॥ ६॥
साधु पृष्टं महाबाहो! वदामि शृणु तत्त्वतः।
वेदान्ते सुप्रतिष्ठोऽहं वेदान्तं समुपाश्रय॥ ७॥

वेदान्ताः के रघुश्रेष्ठ ! वर्त्तन्ते कुत्र ते वद ।
हनूमन् ! शृणु वक्ष्यामि वेदान्तस्थितिमञ्जसा ॥ ८ ॥
निश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः ।
तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठितः ॥ ९ ॥
राम ! वेदाः कतिविधास्तेषां शाखाश्च राघव ! ।
तासूपनिषदः काः स्युः कृपया वद तत्त्वतः ॥ १० ॥

श्रीराम उवाच ।

ऋग्वेदादिविभागेन वेदाश्चत्वार ईरिताः ।
तेषां शाखाह्यनेकाः स्युः स्तासूपनिषदस्तथा ॥ ११ ॥
२१
ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसङ्ख्यकाः ।
१०९
नवाधिकशतं शाखा यजुषो मरुतात्मज ! ॥ १२ ॥
१०००
सहस्रसङ्ख्यया जाताः शाखाः साम्नः परन्तप ! ।
५०
अथर्व्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे !॥ १३ ॥
एकैकस्यास्तु शाखाया एकैकोपनिषन्मता ।
तासामेकामृचं येन पठ्यते भक्तितो मयि ॥ १४ ॥
स मत्सायुज्यपदवीं प्राप्नोति मुनिदुर्लभाम् ।

मारुतिरुवाच ।

राम ! केचिन्मुनिश्रेष्ठा मुक्तिरेकेति चक्षिरे ॥ १५ ॥
केचित् त्वन्नामभजनात् काश्यां तारोपदेशतः ।
अन्ये तु साङ्ख्ययोगेन भक्तियोगेन चापरे ॥ १६ ॥
अन्ये वेदान्तवाक्यार्थविचारात् परमर्षयः ।
सालोक्यादिविभागेन चतुर्द्धा मुक्तिरीरिता ॥ १७ ॥

स होवाच श्रीरामः ।

*कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी ।
दुराचाररतोवापि मन्नामभजनात् कपे ! ॥
सालोक्यमुक्तिमाप्नोति न तु लोकान्तरादिकम् ।
काश्यान्तु ब्रह्मनालेऽस्मिन् मृतो मत्तारमाप्नुयात् ॥
पुनरावृत्तिरहितां मुक्तिं प्राप्नोति मानवः ।
यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः ।
जन्तोर्दक्षिणकर्णे तु मत्तारं समुपादिशत् ॥
निर्धूताशेषपापौघो मत्सारूप्यं भजत्ययम् ।
सैव सालोक्य सारूप्य मुक्तिरित्यभिधीयते ॥
सदाचाररतो भूत्वा द्विजो नित्यमनन्यधीः ।
मयि सर्व्वात्मके भावो मत्सामीप्यं भजत्ययम् ॥
सैव सालोक्यसारूप्यसामीप्या मुक्तिरीष्यते ।
गुरूपदिष्टमार्गेण ध्यायन् मद्रूपमव्ययम् ॥
मत्सायुज्यं द्विजः सम्यक् भजेद्भ्रमरकीटवत् ।
सैव सायुज्यमुक्तिः स्याद्ब्रह्मानन्दकरी शिवा ॥
चतुर्विधा तु या मुक्तिर्मदुपासनया भवेत् ।
इयं कैवल्यमुक्तिस्तु केनोपायेन सिध्यति ॥
माण्डुक्यमेकमेवालं मुमुक्षूणां विमुक्तये ।
तथाप्यसिद्धं चेत् ज्ञानं दशोपनिषदं पठ ॥
ज्ञानं लब्ध्वा चिरादेव मामकं धाम यास्यसि ।
तथापि दृढता नोचेद्विज्ञानस्याञ्जनासुत ! ॥
द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्त्तय ।

* कैवल्यमूर्त्तिः ।

विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ॥

तासां क्रमं सशान्तिञ्च शृणु वक्ष्यामि तत्त्वतः ।

१। २। ३। ४। ५। ६। ७।

ईश केन कठ प्रश्न मुण्ड माण्डुक्य तित्तिरिः ॥

८। ९। १०।

ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा ।

११। १२। १३। १४। १५। १६।

ब्रह्म कैवल्य जाबाल श्वेताश्वो हंस आरुणिः ॥

१७। १८। १९। २०। २१। २२। २३।

गर्भो नारायणो हंसो[१] बिन्दु[२] र्नादः[३] शिरः[४] शिखा[५] ।

२४। २५। २६। २७।

मैत्रायणी कौषितकी बृहज्जाबाल तापनी[६] ॥

२८। २९। ३०। ३१। ३२।

कालाग्निरुद्र मैत्रेयी सुबाल क्षुरि मन्त्रिका ।

३३। ३४। ३५। ३६।

सर्व्वसारं निरालम्बं रहस्यं[७] वज्रसूचिकम् ॥

३७। ३८। ३९। ४०। ४१। ४२।

तेजो[८] नादो[९] ध्यानं[१०] विद्या[११] योगतत्त्वात्मबोधकम् ।

---

१ हंसः—परमहंसोपनिषत् ।

२ बिन्दुः—अमृतबिन्दूपनिषत् ।

३ नादः—अमृतनादः ।

४ शिरः—अथर्वशिरः ।

५ शिखा—अथर्व्वशिखा ।

६ तापनी—नृसिंहतापनी ।

७ रहस्यं—शुकरहस्यम् ।

८ तेजः—तेजोबिन्दुः ।

९ नादः—नादबिन्दुः ।

१० ध्यानं—ध्यानबिन्दुः ।

११ विद्या—ब्रह्मविद्योपनिषत् ।

४२। ४३। ४५। ४६। ४७। ४८।
परिव्राट्[1] त्रिशिखी[2] सीता चूड़ा[3] निर्व्वाण मण्डलम्[4]॥
४९। ५०। ५१। ५२। ५३।
दक्षिणा[5] शरभं स्कन्दं महानारायणा द्वयम्[6]।
५४। ५५। ५६। ५७।
रहस्यं[7] रामतपनं वासुदेवञ्च मुद्गलम्॥
५८। ५९। ६०। ६१। ६२। ६३।
शाण्डिल्यं पैङ्गलं भिक्षु महच्छा[8] रीरकं[9] शिखा[10]।
६४। ६५। ६६। ६७।
तुरीयातीत संन्यास परिव्राजा[11] क्षमालिका॥
६८। ६९। ७०। ७१। ७२। ७३। ७४।
अव्यक्तै काक्षरं पूर्णा[12] सूर्य्याक्ष्य ध्यात्म कुण्डिका।
७५। ७६। ७७। ७८। ७९।
सावित्र्या त्मा पाशुपतं परब्रह्मा वधूतकम्।

---

१ परिव्राट्—नारदपरिव्राडुपनिषत्।
२ त्रिशिखी—त्रिशिखीब्राह्मणोपनिषत्।
३ चूड़ा—योगचूड़ामण्युपनिषत्।
४ मण्डलं—मण्डलब्राह्मणोपनिषत्।
५ दक्षिणा—दक्षिणामूर्त्त्युपनिषत्।
६ अद्वयं—तारकोपनिषत्।
७ रहस्यं—रामरहस्योपनिषत्।
८ महत्—महोपनिषत्।
९ शारीरकं—शारीरकोपनिषत्।
१० शिखा—योगशिखोपनिषत्।
११ परिव्राजः—परमहंसपरिव्राजकोपनिषत्।
१२ पूर्णा—अन्नपूर्णोपनिषत्।

८० । ८१ । ८२ । ८३ । ८४ ।

त्रिपुरातपनं देवी त्रिपुरा कठ[1] भावना ॥

८५ । ८६ । ८७ । ८८ । ८९ । ९० ।

हृदयं कुण्डली[2] भस्म[3] रुद्राक्ष गण[4] दर्शनम्[5] ।

९१ । ९२ । ९३ । ९४ ।

तारसार महावाक्य पञ्चब्रह्मा ग्निहोत्रकम्[6] ॥

९५ । ८६ । ९७ । ९८ ।

गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकम् ।

९९ । १०० । १०१ । १०२ ।

शाट्यायनी हयग्रीवं दत्तात्रेयं च गारुड़म् ॥

१०३ । १०४ । १०५ । १०६ । १०७ । १०८ ।

कलि[7] जाबालि सौभाग्य रहस्य[8] ऋच मुक्तिका ।

एवमष्टोत्तरशतं भावनात्रयनाशनम् ॥

ज्ञानवैराग्यदं पुंसां वासनात्रयनाशनम् ।

पूर्वोत्तरेषु विहित तत्तच्छान्तिपुरःसरम् ॥

वेदविद्याव्रतस्नातदेशिकस्य मुखात् स्वयम् ।

गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः ।

प्रारब्धक्षयपर्य्यन्तं जीवन्मुक्ता भवन्ति ते ॥

---

१ कठः—कठरुद्रोपनिषत् ।

२ कुण्डली—योगकुण्डल्युपनिषत् ।

३ भस्म—भस्मजाबालोपनिषत् ।

४ गणः—गणपत्युपनिषत् ।

५ दर्शनं—जाबालदर्शनोपनिषत् ।

६ अग्निहोत्रकं—प्राणाग्निहोत्रोपनिषत् ।

७ कलिः—कलिसन्तरणोपनिषत् ।

८ रहस्यं—सरस्वतिरहस्योपनिषत् ।

ततः कालवशादेव प्रारब्धे तु क्षयं गते।
वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः।
सर्व्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्।
सकृत् श्रवणमात्रेण सर्व्वाघौघनिकृन्तनम्।
मयोपदिष्टं शिष्याय तुभ्यं पवननन्दन!।
इदं शास्त्रं मयादिष्टं गुह्यमष्टोत्तरं शतम्।
ज्ञानतोऽज्ञानतो वापि पठतां बन्धमोचकम्।
राज्यं देयं धनं देयं याचतः कामपूरणम्।
इदमष्टोत्तरशतं न देयं यस्य कस्यचित्।
नास्तिकाय कृतघ्नाय दुराचाररताय वै।
मद्भक्तिविमुखायापि शास्त्रगर्त्तेषु मुह्यते।
गुरुभक्तिविहीनाय दातव्यं न कदाचन।
सेवापराय शिष्याय हितपुत्त्राय मारुते!।
मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे।
सम्यक् परीक्ष्य दातव्यमेवमष्टोत्तरं शतम्।
यः पठेच्छृणुयाद्वापि स मामेति न संशयः।

तदेतदृचाभ्युक्तम्।

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृतवे शठाय मामाब्रूयाद्वीर्य्यवती तथास्याम्॥
यमेवैष विद्या श्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम्।
अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठा-
मिति॥ १॥

अथ हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ ।
ऋग्वेदादि विभागेन पृथक् शान्ति मनुब्रूहीति ।

१ । २ । ३ ।
सहोवाच श्रीरामः । ऐतरेय कौषीतकी नादवि-
४ । ५ । ६ । ७ । ८ । ९ ।
न्द्वात्मप्रबोध निर्वाण मुद्गला क्षमालिका त्रिपुरा सौभाग्य
१० ।
बह्वृचाना मृग्वेदगतानां दशसङ्ख्याकाना मुपनिषदां वाङ्मे(१)
१ । २ । ३ ।
मनसीति शान्तिः । ईशावास्य बृहदारण्यक जाबाल
४ । ५ । ६ । ७ । ८ । ९ ।
हंस परमहंस सुबाल मन्त्रिका निरालम्ब त्रिशिखी
१० ११ । १२ । १३ । १४ ।
ब्राह्मणमण्डल ब्राह्मणद्वयतारक पैङ्गल भिक्षु तुरीया-
१५ । १६ । १७ । १८ । १९ ।
तीताध्यात्म तारसार याज्ञवल्क्य शाट्यायनी मुक्तिकानां
शुक्ल यजुर्वेद गताना मेकोनविंशतिसङ्ख्याकाना मुप
१ । २ ।
निषदां पूर्णमदः(२) इति शान्तिः । कठवल्ली तैत्तिरीयक
३ । ४ । ५ । ६ । ७ । ८ । ९ ।
ब्रह्म कैवल्य श्वेताश्वतर गर्भ नारायणामृतबिन्दु अमृतनाद

---

(१) ओं वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठित माविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे माप्रहासीरनेनाधीते नाहोरात्रान् सन्द-धाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तार मवत्ववतु मा-मवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः । हरिः ओम् ।

(२) ओं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय-पूर्णमेवावशिष्यते । ओं शान्तिः शान्तिः शान्तिः ॥ हरिः ओम् ।

१०। ११। १२। १३। १४।
कालाग्निरुद्र च्छुरिका सर्वसार शुकरहस्य तेजोबिन्दु ध्या-
१५। १६। १७। १८। १९। २०।
नबिन्दु ब्रह्मविद्या योगतत्त्व दक्षिणामूर्त्ति स्कन्द शारीरक
२१। २२। २३। २४। २५। २६। २७।
योगशिखै काक्षराक्ष्य वधूत कठरुद्र हृदय योगकुण्ड-
२८। २९। ३०। ३१।
लिनी पञ्चब्रह्म प्राणाग्निहोत्र वराह कलिसन्तरण सर-
३२।
स्वती रहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत् सङ्ख्या-
१।
कानामुपनिषदां सहनाववत्विति१ शान्तिः। केन च्छा-
२। ३। ४। ५ ६।
न्दोग्यारुणि मैत्रायणी मैत्रेयी वज्रसूचिक योग-
७। ८। ९। १०। ११। १२।
चूड़ामणि वासुदेव महत् संन्यासा व्यक्त कुण्डिका सा-
१३। १४। १५। १६।
वित्री रुद्राक्ष जाबालदर्शन जाबालीनां सामवेद गता-
नां षोड़शसङ्ख्याकानामुपनिषदामाप्यायन्त्विति२ शान्तिः।
१। २। ३। ४। ६। ६।
प्रश्न मुण्डक माण्डूक्या थर्वशिरो थर्वशिखा बृहज्जा-

---

(१) ओं सहनाववतु सहनौ भुनक्तु सहवीर्य्यं करवावहै। तेजस्विनावधीतमस्तु माविद्विषावहै॥ ओं शान्तिः शान्तिः शान्तिः। हरिः ओं।

(२) ओं आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुःश्रोत्रमथोबलमिन्द्रियाणि च सर्व्वाणि सर्व्वं ब्रह्मौपनिषदम्। माहं ब्रह्मनिराकुर्य्यां मामाब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणमेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्म्मास्ते मयि सन्तु। ओं शान्तिः ओं शान्तिः ओं शान्तिः हरिः ओं।

७ । ८ । ९ । १० ।
बाल नृसिंहतापनी नारदपरिव्राजक सीता शरभ महा-
११ । १२ । १३ । १४ । १५ ।
नारायण रामरहस्य रामतापनी शाण्डिल्य परमहंस
१६ । १७ । १८ । १९ ।
परिव्राजकान्नपूर्णा सूर्य्यात्म पाशुपत परब्रह्म त्रिपुरा-
२० । २१ । २२ । २३ । २४ २५ । २६ ।
तपन देवी भावना भस्म जाबाल गणपति महावाक्य गो-
२७ । २८ । २९ । ३० । ३१ ।
पालतपन कृष्ण हयग्रीव दत्तात्रेय गारुडानामथर्ववेद-
गतानामेकत्रिंशत् संख्याकानामुपनिषदां भद्रं (१) कर्णे-
भिरिति शान्तिः । मुमुक्षवः पुरुषाः साधनचतुष्टय-
सम्पन्नाः श्रद्धावन्तः सत्कुलभवं श्रोत्रियं शास्त्रवात्सल्यं
गुणवन्तं अकुटिलं सर्वभूतहितेरतं दयासमुद्रं सद्गुरुं
विधिवदुपसंगम्योपहारपाणयोऽष्टोत्तरशतोपनिषदं विधि-
वदधीत्य श्रवण मनन निदिध्यासनानि नैरन्तर्येण कृत्वा-
प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधि विनिर्मुक्त घटाकाशवत्
परिपूर्णता विदेहमुक्तिः सैव कैवल्यमुक्तिरिति । अत-
एव ब्रह्मलोकस्था अपि ब्रह्ममुखाद्वेदान्तश्रवणादि कृत्वा
तेन सह कैवल्यं लभन्ते । अतः सर्वेषां कैवल्यमुक्ति-
र्ज्ञानमात्रेणोक्ता । न कर्मसांख्ययोगोपासनादिभिरित्युप-
निषत् । प्रथमोऽध्यायः ।

---

(१) ओं भद्रं कर्णेभिः शृणुयाम देवाभद्रं पश्येम अक्षभिर्यजत्राः । स्थिरै रङ्गैस्तुष्टुवांसस्तनुभिर्व्यशमदेवहितं यदायुः । ओं शान्तिः शान्तिः शान्तिः । हरिः ओं ॥

तयाहैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ ।

केयं जीवन्मुक्तिः केयं विदेहमुक्तिः किं वा तत्र प्रमाणं कथं वा तत्सिद्धिः सिद्ध्या वा किं प्रयोजनमिति ।

सहोवाच श्रीरामः ।

पुरुषस्य कर्तृत्व-भोक्तृत्व-सुखदुःखादिलक्षण श्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः । उपाधिविनिर्मुक्तघटाकाशवत् प्रारब्धक्षयाद्विदेहमुक्तिः । जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतोपनिषदः प्रमाणम् । कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनं भवति । तत्पुरुषप्रयत्नसाध्यं भवति । यथा पुत्रकामेष्टिना पुत्रं वाणिज्यादिना वित्तं ज्योतिष्टोमेन स्वर्गं तथा पुरुषप्रयत्नसाध्यवेदान्तश्रवणादिजनितसमाधिना जीवन्मुक्त्यादिलाभो भवति । सर्ववासना क्षयात्तल्लाभः ॥

अत्र श्लोका भवन्ति ॥

उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं मतम् ।
तत्रोच्छास्त्र मनर्थाय परमार्थाय शास्त्रितम् ।
लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।
द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च तौ ।
वासनौघेन शुद्धेन तत्र चेदनुनीयसे ।
तत् क्रमेणाशु तेनैव मामकं पदमाप्नुहि ।
अथ चेदशुभो भावस्त्वां योजयत्यतिसङ्कटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता कपे ! ।

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि।
अशुभेषु समाविष्टं शुभेष्वेवावतारयेत।
अशुभाच्चालितं याति शुभं तस्मादपीतरत्।
पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम्।
द्रागभ्यासवशाद्याति यदा ते वासनोदयम्।
तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन!।
सन्दिग्धायामपि भृशं शुभामेव समाचर।
शुभायां वासनावृद्धौ न दोषाय मरुत्सुत!।
वासनाक्षयविज्ञान मनोनाशा महामते!।
समकालं चिराभ्यस्ता भवन्ति फलदा मताः।
त्रयमेव समं यावन्नाभ्यस्तञ्च पुनः पुनः।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः।
एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम्।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीर्णता इव।
त्रिभिरेतैश्चिराभ्यस्तै हृदयग्रन्थयो दृढाः।
निःशङ्कमेव नश्यन्ति विसच्छेदाद्गुणा इव।
जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित्।
तस्मात् सौम्य! प्रयत्नेन पौरुषेण विवेकिना।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेव समाश्रय।
तस्माद्वासनया युक्तं मनोबद्धं विदुर्बुधाः॥
सम्यक् वासनया त्यक्तं मुक्तमित्यभिधीयते।

मनो निर्वासनीभावमाचराशु महाकपे!।
सम्यगालोचनात्सत्याद्वासना प्रविलीयते।
वासनाविलये चेतः शमसायाति दीपवत्।
वासनां संपरित्यज्य मयि चिन्मात्रविग्रहे।
यस्तिष्ठति गतव्यग्रः सोऽहं सच्चित्सुखात्मकः।
समाधिमथकर्म्माणि माकरोतु करोतु वा।
हृदये नाश सर्वेहो मुक्त एवोत्तमाशयः।
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः।
न समाधानजाप्याभ्यां यस्य निर्वासनं मनः।
सन्त्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्।
वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः।
प्रवर्त्तते वहिःस्वार्थे वासनामात्रकारणम्।
अयत्नोपनतेष्वक्षि दृक् द्रव्येषु यथा पुनः।
*तीरागमेव पतति तद्वत् कार्य्येषु धीरधी।
भावसच्चित्प्रकटितामनुरूपाच्च मारुते!।
चित्तस्योत्पत्तिपरमां वासनां मुनयो विदुः।
दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम्।
चित्तं संजायते जन्मजरामरणकारणम्।
वासनावसतः प्राणस्पन्दस्तेन च वासना।
क्रियते चित्तवीजस्य तेन वीजाङ्कुरक्रमः।
द्वे वीजे चित्तवृक्षस्य प्राणस्पन्दनवासने।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः।
असङ्गव्यवहारत्वाद्भवभावनवर्जनात्।

* नीरागमेव।

शरीरनाशदर्शित्वाद्वासना न प्रवर्त्तते ।
वासनासम्परित्यागाच्चित्तं गच्छत्यचित्तताम् ।
अवासनत्वात् सततं यदा न मनुते मनः ।
अमनस्तात् तदोदेति परमोपशमप्रदा ।
अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ।
ततः पक्वकषायेन नूनं विज्ञातवस्तुना ।
शुभोप्यसौ त्वया त्याज्यो वासनौघो निराधिना ।
द्विविधश्चित्तनाशोऽस्ति सरूपारूप एव च ।
जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिगः ।
अस्य नाशमिदानीं त्वं पावने ! शृणुसादरम् ।
चित्तनाशाभिधानं हि यदा ते विद्यते पुनः ।
मैत्रादिभिर्गुणैर्युक्तं शान्तिमेति न संशयः ।
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ।
सरूपोसौ मनो नाशो जीवन्मुक्तस्य विद्यते ।
अरूपस्तु मनो नाशो वै देही मुक्तिगो भवेत् ।
सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिदं स्थितम् ।
सङ्कल्प एव तन्मन्ये सङ्कल्पोपशमेन तत् ।
शोषयाशु यथा शोषमेति संसारपादपः ।
उपाय एकएवास्ति मनसः स्वस्य निग्रहे ।
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनोनाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ।

तावन्निशीव वेताला वलन्ति हृदि वासनाः।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः।
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विपः।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासना।
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च।
अङ्गानङ्गैः समाक्रम्य जयेदादौ स्वकं मनः।
उपविश्योपविश्यैकाश्चिन्तत् केन मुहुर्मुहुः।
न शक्यते मनो जेतुं विनायुक्तिमनिन्दिताम्।
अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः।
अध्यात्मविद्याधिगमः साधुसङ्गतिरेव च।
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम्।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल।
सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये।
चेतसो दीपमुत्सृज्य विचिन्वन्ति तमोजनैः।
विमूढाः कर्त्तुमुद्युक्ता ये हतश्चेतसो जयम्।
ते निबध्नन्ति नागेन्द्रमुन्मत्तं विसतन्तुभिः।
द्वे वीजे चित्तवृक्षस्य निवृत्तिव्रतधारिणः।
एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना।
सा हि सर्वगता सम्वित् प्राणस्पन्देन चाल्यते।
चित्तैकाग्राद्यतोज्ञानं मुक्तिः समुपजायते।
तत्साधनमथोध्यानं यथावदुपदिश्यते।
विनाप्यविकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात्।
यशोऽरिष्टञ्च चिन्मात्रं चिदानन्दं विचिन्तय।

अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते।
बहिरस्तङ्गते प्राणे यावन्नापान उद्गतः।
तावत् पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः।
ब्रह्माकारमनोवृत्ति प्रवाहोऽहं कृतिं विना।
सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः।
प्रशान्तवृत्तिकं चित्तं परमानन्ददायकम्।
असम्प्रज्ञातनामायं समाधिर्योगिनां प्रियः।
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम्।
अतद्व्यावृत्तिरूपोसौ समाधिर्मुनिभावितः।
ऊर्द्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम्।
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः।
दृढभावनयात्यक्तपूर्वापरविचारणम्।
यदादानं पदार्थस्य वासना सा प्रकीर्त्तिता।
भावितं तीव्रसंवेगादात्मना यत्तदेव सः।
भवत्याशु कपिश्रेष्ठ! विगतेतरवासनः।
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः।
संपश्यति यदैवैतत् सद्वस्त्विति विमुह्यति।
वासनावेगवैचित्र्यात् स्वरूपं न जहाति तत्।
भ्रान्तः पश्यति दुर्दृष्टिः सर्व्वं मदवशादिव।
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा।
मलिना जन्महेतुः स्याच्छुभा जन्मविनाशिनी।
अज्ञानसुघनाकारा घनाहङ्कारशालिनी।

पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ।
पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ।
बङ्गयाह्लकयाकथारोमक्येन दृष्टैव किम् ।
अन्वेष्टव्यं प्रयत्नेन मारुते ! ज्योतिरान्तरम् ।
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ! ब्रह्म न ब्रह्मवित् स्वयम् ।
अधीत्य चतुरो वेदान् सर्वशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ।
स्वदेहाशुचि गन्धेन न विरज्येत यः पुमान् ।
विरागकारणन्तस्य किमन्यदुपदिश्यते ।
अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।
बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
वासनां संपरित्यज्य मोक्षार्थित्वमपि त्यज ।
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ।
ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ।
तामप्यथ परित्यज्य मनोबुद्धिसमन्वितम् ।
शेषस्थिरसमाधानो मयि त्वं भव मारुते ! ।
अशब्दमस्पर्शमरूपमव्ययं यथा रसं नित्यमगन्धवच्च यत् ।
अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्त्तिहम्॥
दृशिस्वरूपं गगणोपमम्परं सकृद्विभातं त्वजमेकमक्षरम् ।

अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ।
बहिरस्तङ्गते प्राणे यावन्नापान उद्गतः ।
तावत् पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः ।
ब्रह्माकारमनोवृत्तिप्रवाहोऽहं कृतिं विना ।
सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः ।
प्रशान्तवृत्तिकं चित्तं परमानन्ददायकम् ।
असम्प्रज्ञातनामायं समाधिर्योगिनां प्रियः ।
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ।
अतद्व्यावृत्तिरूपोसौ समाधिर्मुनिभावितः ।
ऊर्द्धपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् ।
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ।
दृढभावनयात्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्त्तिता ।
भावितं तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु कपिश्रेष्ठ ! विगतेतरवासनः ।
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः ।
संपश्यति यदैवैतत् सद्वस्त्विति विमुह्यति ।
वासनावेगवैचित्र्यात् स्वरूपं न जहाति तत् ।
भ्रान्तः पश्यति दुर्दृष्टिः सर्व्वं मदवशादिव ।
वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्महेतुः स्याच्छुभा जन्मविनाशिनी ।
अज्ञानसुघनाकारा घनाहङ्कारशालिनी ।

पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ।
पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ।
बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन मारुते ! ज्योतिरान्तरम् ।
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ! ब्रह्म न ब्रह्मवित् स्वयम् ।
अधीत्य चतुरो वेदान् सर्वशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ।
स्वदेहाशुचि गन्धेन न विरज्येत यः पुमान् ।
विरागकारणान्तस्य किमन्यदुपदिश्यते ।
अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।
बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
वासनां संपरित्यज्य मोक्षार्थित्वमपि त्यज ।
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ।
ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ।
तामप्यथ परित्यज्य मनोबुद्धिसमन्वितम् ।
शेषस्थिरसमाधानो मयि त्वं भव मारुते ! ।
अशब्दमस्पर्शमरूपमव्ययं यथा रसं नित्यमगन्धवच्च यत् ।
अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहम्॥
दृशिस्वरूपं गगणोपमम्परं सकृद्विभातं त्वजमेकमक्षरम् ।

अलेपकं सर्वगतं यदद्वयं तदेव चाहꣳ सकलं विमुक्त ओम् ।
दृशिस्तु शुद्धोऽहमविक्रियात्मको नमेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्द्ध्वमधश्च सर्वतः सुपूर्णभूमाहमितीह भावय ।
अजोमरश्चैव तथाजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः ।
न कारणं कार्य्यमतीत्य निर्मलः सदैवतृप्तोऽहमितीव भावयः ।

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनो स्पन्दतामिव ।
तदेतत् तदृचाभ्युक्तं तद्विष्णोः परमं पदꣳ ।
सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ।

तद्विप्रासो तद्विप्रासो विपन्यवो जागृवाꣳ सः समिन्धते ।
विष्णोर्यत्परमंपदमोꣳ सत्यमित्युपदिशत् सत्यमित्युपनिषत्।

ॐ॥ पूर्णमद इति शान्तिः । ओं तत्सत् । इति शुक्ल-
यजुर्वेदगता मुक्तिकोपनिषत् समाप्ता ।

---

| | | | |
|---|---|---|---|
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ... | ॥। |
| २६ | वाचस्पत्यम् [संस्कृत-वृहदभिधान] | ... | ६० |
| २७ | कादम्बरी—सटीक | ... | ४ |
| २८ | राजप्रशस्ति | ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | | ४ |
| ३० | सर्वदर्शनसंग्रह | ... | २ |
| ३१ | भामिनीविलास—सटीक | ... | १ |
| ३२ | हितोपदेश—सटीक | ... | १ |
| ३३ | भाषापरिच्छेद मुक्तावलीसहित | ... | १ |
| ३४ | बहुविवाहवाद | ... | । |
| ३५ | दशकुमारचरित—सटीक | ... | १॥ |
| ३६ | परिभाषेन्दुशेखर | ... | १॥ |
| ३७ | कविकल्पद्रुम (वोपदेवकृत धातुपाठ) | ... | ॥ |
| ३८ | चक्रदत्त (वैद्यक) | ... | २॥ |
| ३९ | उणादिसूत्र—सटीक | ... | २ |
| ४० | मेदिनी कोष | ... | २॥ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] | ... | २॥ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ... | ॥ |
| ४३ | माधवचम्पू | ... | ।= |
| ४४ | तर्कसंग्रह (इंराजी अनुवाद सहित) | ... | ॥ |
| ४५ | प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) | | १॥ |
| ४६ | विवेकचूड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित] | | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] | ... | ५ |
| ४८ | लिङ्गानुशासन (सटीक) | ... | । |
| ४९ | ऋतुसंहार—सटीक | ... | ।= |